# स्वरव्यञ्जन शिक्षा

रेफानुलोमे नियते प्रश्रिताकामयोः क्रमे
रलोष्मोपहितोर्ह्रस्वो ङनवर्जं परिपन्नगे १

अभ्यासे त्रीति संख्यायास्तृतीयतिसृवर्जितः
रिणच्छ्रितो रिपुः क्रिमिः क्रिविः व्रिशो रिशादसः २

त्रिविष्टित्रिष्टुजातस्य त्रिपद्यस्त्रिस्त्रिधात्रितः
श्रीस्त्रीप्रयोक्तुयस्त्रिंशत्क्रिविरादिषु सोपदा ३

रिषोथ रिषतो रिश्यश्श्रितः सप्तकवर्जितः
यकारे च रिशोक्तौ च आदौ चानुपदा रिपुः ४

रिणम्रिष्टं रिरिक्षांसो रिहतेऽथ रिशादसः
इत्युक्तं व्यंजनं सर्वमिदानीमुच्यते स्वरः ५

इति प्रथमो वर्गः

विवृत्तिक्षैप्रभुग्नानि पुरा रेकोऽपिवा यदि
विक्रमो नाप्यनुस्वार ऋकारः स स्फुटस्वरः १

संयोगाच्च परः पूर्वः संयोगे व्यंजनोपधः
व्यंजनं वर्जयित्वैकहसनामपमं त्रिणः २

व्यंजनान्तं पदं पूर्वे सोमधे पुरतःस्थिते
यकारोदयसंख्यानात् क्लिविवर्जं स्वरो भवेत् ३

आस्वसद्मेति पटिता त्रिष्विति द्वादशस्वराः
ये चान्ये व्यंजनपराः संदिग्धास्ते स्वराः ४

इति द्वितीयो वर्गः २

रिवर्णोऽनुलोमादौ विवृत्त्यादिप्रसंगतः
नाभ्यासे चैप्रता प्राप्तेति शब्दत्रय इत्युत १

रिणन्तिरेक इत्यादौ वृणक्ते रेफनिश्चयात्
अरिमृधश्चररिपुर्दौर्णां मात्क्रिमिरश्विना २

क्रिविं दशविशोदैवन्देवो मर्दरिशादसः
मर्त्यं रिषो रीषतो नरिष्येद्धौरी अधिश्रितः ३

प्रवोभ्रियंत इत्यादौ रिङ्शयग्लिङ्क्विति स्मृतेः
बुद्ध्यो रिषे रेषणं नेत्रेछादेरिच्यते क्विप ४

सावेकाचस्तृतीयादिरित्येकार उदात्तभाक्
रिफते ककुभो रेफो रलयोरेकतास्मृतेः ५

इति तृतीयो वर्गः

विवृत्त्यादौ स्वरे रेफोऽनुलोमादिप्रसंगतः
संयोगाश्च परो व्याप्तेर्वंगृदस्य स्त्रिभिर्यथा १

गर्मेति गर्दते सिद्धः प्रकृत्यनुपपत्तितः
गृदेतीतरयामेञ्चोरणं गर्ददवंशृदः २

स्तृभिस्तृणातेस्तृणोतेर्णास्तृतेत्यकृतेतिवत्
संयोगे वृद्धमित्यादिवर्धन्यादिषु निश्चयात् ३

तृष्वितिह्विप्रनामेदतृष्येतरुपमावलात्
वृकादयश्च विवृता ज्योतिष्कादिनिरेचनात् ४

इति चतुर्थो वर्गः

सर्वोपधश्च स्वरघोषवत्परो रेफं रेफी ते पुरा रेफसंधयः १

रेफोदयो लुप्यते

द्राघितोपधा ह्रस्वस्य

अकामनियतावुभाविमौ

विसर्जनीय आकारमरेफी घोषवत्परः

ओकारं ह्रस्व पूर्वः तौ सन्धो नियतप्रश्रितौ २

निनृतिः न क्रमतः तदृतं
नाप्यनुस्वारः समृतुभिः ३

संयोगश्च परः वृंगदस्य संस्कृतः
पूर्वसंय्योगे व्यञ्जनोपध इति कस्मान्नरिष्यमकदा चन ४

इति पञ्चमो वर्गः

आसुसद्य नृषु यदन्ने प्राचा
जिह्वं ध्वंसयन्तं नृषु यदन्नेति
त्रीणित्विषी समन्तोऽध्वस्यैव
वियस्यते पृथिव्यां योऽस्मान्नं १

वातोपधूतोरध्वं वृत्रं वाजिन्तम
अयेति द्वादशनृष्वस्वरेणाय
दूमध्यमर्धं वीरस्यातप्तनूर्
यन्ते राजन् मैनमग्ने शृतं यदा २

ददर्शन् रतेति सप्तश्रृत
स्वरेण यथा कवर्गे वृका मृगः ३

ऋघायमणोऽवित्रेकेऽग्निगुरिति

प्रसादसंधियं व्यंजनम् ४

चवर्गे ऋचा इच्छन्ति ऋजुरिंजसेरिति चाथ ५

इत्यांभ्याससन्धिग्धं व्यंजनं
टवर्गे मृर ऋणानि रिरिगिति संचितो रेफः
तवर्गे ऋतं वृथाददूदरेण
ऋषक् त्रित इति संचितो रेफः ६

अन्तस्थास्वजागृजागृविं त्रिविष्टिधाद्विति रेफः ७

संख्यार्थत्वात्
युष्मासु ऋष्यः
रिशादस इति संचितो रेफः
ऋष्टयो रिषमिति रेफः ८

बृसयस्य बृहत् बृहस्पतिः ककारादिः पकारादिश्चकारादिश्च यो
भवति अन्तस्था यरलवाः ककारादि व्यंजनं वहिः ९

इति षष्ठो वर्गः

स्वरव्यञ्जनशिक्षासमाप्ता